॥ श्रीनृसिंहमङ्गलम् ॥

घटिकाचल शृङ्गाग्र विमानोदर वासिने ।
निखिलामर सेव्याय नरसिंहाय मङ्गलम् ॥ १॥

उदीचीरङ्ग-निवसत्सुमनस्तोम सूक्तिभिः ।
नित्याभिवृद्ध यशसे नरसिंहाय मङ्गलम् ॥ २॥

सुधावल्ली-परिष्वङ्ग-सुरभीकृत-वक्षसे ।
घटिकाद्रि-निवासाय श्रीनृसिंहाय मङ्गलम् ॥ ३॥

सर्वारिष्ट-विनाशाय सर्वेष्ट-फलदायिने ।
घटिकाद्रि-निवासाय श्रीनृसिंहाय मङ्गलम् ॥ ४॥

महागुरु मनःपद्म मध्य नित्य निवासिने ।
भक्तोचिताय भवतात् मङ्गलं शाश्वती समाः ॥ ५॥

श्रीमत्यै विष्णुचित्तार्यमनोनन्दन हेतवे ।
नन्दनन्दन-सुन्दर्यै गोदायै नित्यमङ्गलम् ॥ ६॥

श्रीमन्महाभूतपुरे श्रीमत्केशव-यज्वनः ।
कान्तिमत्यां प्रसूताय यतिराजाय मङ्गलम् ॥ ७॥

पादुके यतिराजस्य कथयन्ति यदाख्यया।
तस्य दाशरथेः पादौ शिरसा धारयाम्यहम् ॥ ८॥

श्रीमते रम्यजामातृ-मुनीन्द्राय महात्मने ।
श्रीरङ्गवासिने भूयात् नित्यश्रीः नित्यमङ्गलम् ॥ ९॥

सौम्यजामातृ-योगीन्द्र चरणाम्बुज-षट्पदम् ।
देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥ १०॥

वाधूल-श्रीनिवासार्य-तनयं विनयाधिकम् ।
प्रज्ञानिधिं प्रपद्येऽहं श्रीनिवासमहागुरुम् ॥ ११॥

चण्डमारुत-वेदान्तविजयादि-स्वसूक्तिभिः ।
वेदान्त-रक्षकायास्तु महाचार्याय मङ्गलम् ॥ १२॥